वर्विहितयावद्विशेषगुणतमस्तोमसमुच्छेदाः सुधियो निरन्तां विगलितनिखिलोपप्लवजलधिप्लवां मुक्तिशय्यामधिशयानाः प्रकाशयन्ति दुष्तर्कतर्कशास्त्रप्रसादप्रतिष्ठानिष्ठाम् ।

तदेवमप्रतिरूपस्वरूपसंसारान्धकूपप्रतिघातविकलीकृतानसुभृतः समुद्दिधीर्षुः करुणावरुणालयो भगवान् महर्षिर्गौतमः षोडशपदार्थतत्त्वविवेकदृष्टिसिद्धौषधायमानं तर्कशास्त्रं रचयाञ्चकार । तस्यैव महर्षेः प्रत्यक्षानुमानोपमानशब्दाख्यप्रमाणचतुष्टयवादिनो मतमवलम्बमानो लोकोत्तरनव्यन्यायप्रपञ्चप्रजापतिः श्रीमद्गङ्गेशोपाध्यायः प्रमाणचतुष्टयप्रामाण्यव्यवस्थापनपरं युक्तिदीप्तिजालजटालं तत्त्वचिन्तामणिग्रन्थं, प्रणीय निसर्गसुन्दरवाङ्मधुमाधुरीधोरणीभिः प्रमोदयामास निखिलं भुवनतलम् । एव च निजग्रन्थे वाचस्पतिवचःसमुद्धरणात्सर्वतन्त्रस्वतन्त्रश्रीवाचस्पतिमिश्रादर्वाक्तनमये मिथिलामेदिनीमलञ्चकारेत्येव ज्ञायते । अस्य च ग्रन्थस्य लोकोत्तरतया श्रीजयदेवमिश्रेण आलोकनामकव्याख्या, श्रीरुचिदत्तेन प्रकाशनामकव्याख्या, श्रीमथुरानाथतर्कवागीशेन रहस्यनामकव्याख्या, श्रीरघुनाथशिरोमणिना दीधितिनामकव्याख्या निरमायि । आसु च शिरोमणिकृतदीधितिव्याख्याया अतिसङ्क्षिप्ततया सोपपत्तिकवस्तुतत्त्वप्रकाशकतया चात्युत्तमाया वङ्गभूमीश्रवणावतंसायिताभ्यां श्रीजगदीशतर्कालङ्कार–श्रीगदाधरभट्टाचार्याभ्यां सविस्तरं विरच्यते स्म निरुपमा व्याख्या । तत्र च अनुमानखण्डस्य जगदीशकृतव्याख्यायाः स्वरूपशोभनतागुणपाशवशीभूतविद्वन्मण्डलीषु प्राप्तपठनपाठनप्रचाराया अद्यापि कार्त्स्न्येनाऽमुद्रितायाः पुस्तकान्वेषणे बहु क्लिश्यतोऽन्तेवासिनः समीक्ष्य पुण्यलवलाभलालसाप्रबोधितोत्साहवशीकृतः श्रीयुतहरिदासगुप्तमहोदयः प्रवर्तयामास मुद्रितपत्रपरिशोधनाय भट्टनाथस्वामिनम् ।

तस्मिंश्च पूर्वपक्षव्याप्तिपर्यन्तं परिशोध्य कार्यवशात्स्वदेशं गते तेनैव गुप्तमहोदयेन प्रोत्साहितोऽहं यथामति प्रावर्त्तिषि संशोधने । अस्य च वाराणसीस्थराजकीयसंस्कृतपाठशालापुस्तकालयस्थितं तदध्यक्षपण्डितवरश्रीविन्ध्येश्वरीप्रसादशर्मसमनुग्रहलब्धं पठनपाठनप्रचारपरिशुद्धं जागदीशीपुस्तकं सम्पूर्णमुपलभ्य, उपाधिवादे चैतत्पुस्तकस्याऽशुद्धिबहुलतया विश्वविख्यातवैदुषीविभवास्मद्गुरुवरपूज्यपादश्रीमहामहोपाध्यायकैलासचन्द्रभट्टाचार्यशिरोमणिमहाशयानां वङ्गाक्षरलिखितमुपाधिवादग्रन्थं, केवलान्वयिव्यतिरेक्यवयवसव्यभिचारादिग्रन्थे मध्ये खण्डिततयाऽत्रत्यरणवीरसंस्कृतपाठशालाध्यापकश्रीपण्डित–न्यायोपाध्याय–साङ्ख्यतीर्थ–लक्ष्मणशास्त्रिद्राविडमहोदयानां वङ्गाक्षरलिखितपुस्तकं, पञ्चलक्षणादिप्रकरणानां केषाञ्चिन्मल्लिखितं च पुस्तकं, चिन्तामणेः एसियाटिक्सोसायटी–मुद्रितं श्रीजीवानन्दमुद्रितं च पुस्तकं, दीधितेः श्रीजीवानन्दमुद्रितं पुस्तकं च सम्पाद्य, व्यतिरेकिप्रकरणे दीधितिजागदीश्योरभावेन मथुरानाथकृतरहस्यं च सन्निवेश्य, योग्यपाठविशेषञ्च कुण्डलीमध्ये कृत्वा यथाबुद्धिवैभवं प्रकाशितोऽसौ महान् निबन्धः। तदेवमस्मिन्महति निबन्धजलधावुदुम्बरकीटकल्पधीवैभवेन बह्वपराद्धं स्यादिति सम्भावयन् प्रकृतिसुभगशिक्षाभिक्षाभिलाषप्रवणान्तःकरणोऽहं दोषज्ञमण्डलीमण्डनायमानान्विबुधमणीन् साञ्जलिकलिकोपहारं प्रीयतामनेन क्लेशलेशेन कृतज्ञः श्रीजगदीश्वरः सर्वान्तर्यामीति समभ्यर्थये

<table>
<tr>
<td>मार्गकृष्णपञ्चम्यां<br>सोमे. सम्वत्. १९६४<br>श्रीकाशी<br>शुभम्.</td>
<td>}</td>
<td>नयपालाभिजनः<br>सिग्याल—इत्युपनामकः<br>श्रीसोमनाथशर्म्मा.<br>न्याय–वैशेषिकोपाध्यायः<br>काव्यतीर्थश्च ।</td>
</tr>
</table>

# जागदीशी—दीधितिसहिततत्त्वचिन्तामणेः
## अनुमानखण्डस्य
## विषयसूची

—:०:—

विषयाः पृष्ठाङ्काः

### अनुमितिग्रन्थे—



### व्याप्तिवादे—



### व्याप्तिग्रहग्रन्थे—



### उपाधिवादे—

इति शम् ।

अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते। एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र, साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्र्यन्ते।

३ काशिकराजकीयप्रधानसंस्कृतपाठालयाऽध्यापकाः पण्डिता अन्येच शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयै, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम मुद्राः ७ आणकाः ८

५ अन्यैर्देयं प्रतिस्तवक " १ " ०

६ प्रापणव्ययः पृथग् नास्ति ।

७ साम्प्रतं मुद्र्यमाणा ग्रन्थाः- मुद्रिताः स्तवकाः

| | | | |
|---|---|---|---|
| (१) | संस्काररत्नमाला । गोपीनाथभट्ट कृता | ( संस्कारः ) | २ |
| (२) | शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः | ( व्याकरणम् ) | १० |
| (३) | श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम् । | ( मीमांसा ) | १० |
| (४) | भाष्योपबृंहित तत्त्वत्रयम् विशिष्टाद्वैतदर्शन प्रकरणम् श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थ विरचित भाष्टभाषा प्रकाश सहितम् । स० | (वेदान्त ) | २ |
| (५) | करणप्रकाशः । श्रीब्रह्मदेवविरचितः सम्पूर्णः | ( ज्योतिषः ) | १ |
| (६) | भाट्टचिन्तामणिः महामहोपाध्याय-श्रीगागाभट्ट विरचितः । तर्कपादः | ( मीमांसा ) | २ |
| (७) | न्यायरत्नमाला-श्रीपार्थसारथिमिश्र वि० स० | ( मीमांसा ) | २ |
| (८) | ब्रह्मसूत्रभाष्यम्-बादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम् । सम्पूर्णः । | ( वेदान्तः ) | ६ |
| (९) | स्याद्वादमञ्जरी-मल्लिषेणनिर्मिता सम्पूर्णा । | ( जैनदर्शनम् ) | २ |
| (१०) | सिद्धित्रयम्-विशिष्टाद्वैत-ब्रह्मनिरूपणपरम्-श्रीभाष्यकृतां परमगुरुभिः श्री ६ यामुनमुनिभिर्विरचितम् । सम्पूर्णम् | ( वेदान्तः ) | १ |
| (११) | न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः आचार्यचित्सुखमुनिविरचितव्याख्योपेतः | ( वेदान्तः ) | ४ |
| (१२) | विभक्त्यर्थनिर्णयःन्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायरचितः । सम्पूर्णः | ( न्यायः ) | ५ |

(१३) विधिरसायनम श्रीअप्पयदीक्षितकृतम स० (मीमांसा) १

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । } ( मीमांसा ) १५

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता । } ( वेदान्तः ) २

(१६) मीमांसाबालप्रकाशः ( जैमिनीयद्वादशाध्यायार्थसंग्रहः ) श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । } ( मीमांसा ) २

(१७) प्रकरणपञ्चिका ( प्रभाकरमतानुसारि मीमांसादर्शनम ) महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम । श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च सम्पूर्णः ( मीमांसा ) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतश्च । ( वेदान्त ) ३

(१९) कात्यायनश्रौतसूत्रम महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम । १२

(२० ब्रह्मसूत्रभाष्यम श्रीभास्कराचार्यविरचितम ( वेदान्तः ) १

(२१) श्रीहर्षप्रणीतम खण्डनखण्डखाद्यम आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया ( विद्यासागरी ) ति प्रसिद्धया समेतम् । } (वेदान्तः) ३

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता । १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्यया ऽवतरणिकया च सहितम् । } ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता । ( वेदान्त)२

(२५) क्रोडपत्रसंग्रहः अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्योः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि । ( न्यायः ) १

(२६) ब्रह्मसूत्रम,द्वैताद्वैतदर्शनम्।श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजान्हव्याख्यव्याख्यायु०२

(२७) षड्दर्शनसमुच्चयः । बौद्ध नैयायिक कापिल्य जैन वैशेषिक जैमिनीयदर्शन संक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । } १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्याः जागदीशी टीका । १३

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः । ४

(३१) स्मृतिसारोद्धारः ।विश्वम्भरविश्वम्भरत्रिपाठिसंकलितः । २

(३२) वेदान्तरत्नमञ्जुषा । श्रीभगवत्पुरुषोत्तमाचार्य कृता । २

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः,

चौखम्बा [illegible]